कनिक्रदत् ॥ धीभिर्मृजन्ति वाजिनं वने क्रीडन्तमत्यविम् । अभि त्रिपृष्ठं मतयः सम-
स्वरन् ॥ असर्जि कलशां अभि मीढ्वान्त्सप्तिर्न वाजयुः । पुनानो वाचञ्जनयन्न-
सिष्यदत् ॥ १८ ॥ सोमः पवते जनिता मतीनां जनिता दिवो जनिता पृथिव्याः ।
जनिताग्नेर्जनिता सूर्यस्य जनितेन्द्रस्य जनितोत विष्णोः ॥ ब्रह्मा देवानां पदवीः
कवीनामृषिर्विप्राणां महिषो मृगाणाम् । श्येनो गृध्राणां स्वधितिर्वनानां सोमः पवि-
त्रमत्येति रेभन् ॥ प्रावीविपद्वाच ऊर्मिं न सिन्धुर्गिरस्तोमान्पवमानो मनीषाः ।
अन्तः पश्यन्वृजनेमावराण्यातिष्ठति वृषभो गोषु जानन् ॥ १९ ॥ अग्निं वो वृध-
न्तमध्वराणां पुरूतमम् । अच्छा नप्त्रे सहस्वते ॥ अयं यथा न आभुवत्त्वष्टा रूपे-
वतक्ष्या । अस्य क्रत्वा यशस्वतः ॥ अयं विश्वा अभिश्रियोऽग्निर्देवेषु पत्यते ।
आ वाजैरुप नो गमत् ॥ २० ॥ इममिन्द्र सुतं पिब ज्येष्ठममर्त्यं मदम् । शुक्रस्य
त्वाभ्यक्षरं धारा ऋतस्य सादने ॥ नकिष्टुद्रथीतरो हरी यदिन्द्र यच्छसे । नकि-
ष्ट्वानु मज्मना नकिः स्वश्व आनशे ॥ इन्द्राय नूनमर्चतोक्थानि च ब्रवीतन ।
सुता अमत्सुरिन्दवो ज्येष्ठं नमस्यता सहः ॥ २१ ॥ इन्द्र जुषस्व प्रवहायाहि शूर
हरिह । पिबा सुतस्य मतिर्न मधोश्चकानश्चारुर्मदाय ॥ इन्द्र जठरं नव्यं न पृणस्व
मधोर्दिवो न । अस्य सुतस्य स्वाऽ३र्नोप त्वा मदाः सुवाचो अस्थुः ॥ इन्द्रस्तु-
राषाण्मित्रो न जघान वृत्रं यतिर्न । बिभेद वलं भृगुर्न ससाहे शत्रून्मदे सोमस्य ॥ २२ ॥

इति प्रथमोऽर्धः प्रपाठकः

ऋषिः—१ त्रय ऋषिगणाः । २ काश्यपः । ३, ४, १३ असितः काश्यपो देवलो वा । ५ अवत्सारः । ६, १६ जमदग्निः । ७ अरुणो वैतहव्यः । ८ उरु-चक्रिरात्रेयः । ९ कुरुसुतिः काण्वः । १० भरद्वाजो बार्हस्पत्यः । ११ भृगुर्वारुणिर्जमदग्निर्वा । १२ सप्तर्षयः । १४, १५, २३ गोतमो राहूगणः । १७ ऊर्ध्वसद्मा कृतयशाश्च क्रमेण । १८ त्रितः । १९ रेभसूनू काश्यपौ । २० मन्युर्वासिष्ठः । २१ वसुश्रुत आत्रेयः । २२ नृमेधः ॥ देवता—१–६, ११–१३, १६–२० पवमानः सोमः । ७, २१ अग्निः । ८ मित्रावरुणौ । ९, १४, १५, २२, २३ इन्द्रः । १० इन्द्राग्नी ॥

छन्दः—१, ७ जगती । २—६, ८–११, १३, १६ गायत्री । १२ बृहती । १४, १५, २१ पङ्क्तिः । १७ ककुप् सतोबृहती च क्रमेण । १८, २२ उष्णिक् । १९, २३ अनुष्टुप् । २० त्रिष्टुप् ॥ स्वरः—१, ७ निषादः । २–६, ८—११, १३, १६ षड्जः । १२ मध्यमः । १४, १५, २१ पञ्चमः । १७ ऋषभः मध्यमश्च क्रमेण । १८, २२ ऋषभः । १९, २३ गान्धारः । २० धैवतः ॥

गोवित्पवस्व वसुविद्धिरण्यविद्रेतोधा इन्दो भुवनेष्वर्पितः । त्वं सुवीरो असि सोम विश्ववित्तं त्वा नर उप गिरेम आसते ॥ त्वं नृचक्षा असि सोम विश्वतः पवमान वृषभ ता वि धावसि । स नः पवस्व वसुमद्धिरण्यवद्वयं स्याम भुवनेषु जीवसे ॥ ईशान इमा भुवनानि ईयसे युजान इन्दो हरितः सुपर्ण्यः । तास्ते क्षरन्तु मधुमद्घृतं पयस्तव व्रते सोम तिष्ठन्तु कृष्टयः ॥ १ ॥ पवमानस्य विश्ववित्प्र ते सर्गा असृक्षत । सूर्यस्येव न रश्मयः ॥ केतुं कृण्वन्दिवस्परि विश्वा रूपाभ्यर्षसि । समुद्रः सोम पिन्वसे ॥ जज्ञानो वाचमिष्यसि पवमान विधर्मणि ॥ क्रन्दन्देवो न सूर्यः ॥ २ ॥ प्र सोमासो अधन्विषुः पवमानास इन्दवः । श्रीणाना अप्सु वृञ्जते ॥ अभि गावो अधन्विषुरापो न प्रवता यतीः । पुनाना इन्द्रमाशत ॥ प्र पवमान धन्वसि सोमेन्द्राय मादनः । नृभिर्यतो वि नीयसे ॥ इन्दो यदद्रिभिः सुतः पवित्रं परिदीयसे । अरमिन्द्रस्य धाम्ने ॥ त्वं सोम नृमादनः पवस्व चर्षणीधृतिः । सस्निर्यो अनुमाद्यः ॥ पवस्व वृत्रहन्तम उक्थेभिरनुमाद्यः । शुचिः पावको अद्भुतः ॥ शुचिः पावक उच्यते सोमः सुतः स मधुमान् । देवावीरघशंसहा ॥ ३ ॥ प्र कविर्देववीतयेऽव्या वारेभिरव्यत । साह्वान्विश्वा अभि स्पृधः ॥ स हि ष्मा जरितृभ्य आ वाजं गोमन्तमिन्वति । पवमानः सहस्रिणम् ॥ परि विश्वानि चेतसा मृज्यसे पवसे मती । स नः सोम श्रवो विदः ॥ अभ्यर्ष बृहद्यशो मघवद्भ्यो ध्रुवं रयिम् । इषं स्तोतृभ्य आ भर ॥ त्वं राजेव सुव्रतो गिरः सोमा विवेशिथ । पुनानो वह्ने अद्भुत ॥ स वह्निरप्सु दुष्टरो मृज्यमानो गभस्त्योः । सोमश्चमूषु सीदति ॥ क्रीळुर्मखो न मंहयुः पवित्रं सोम गच्छसि । दधत्स्तोत्रे

सुवीर्यम् ॥ ४ ॥ यवं यवं नो अन्धसा पुष्टम्पुष्टं परिस्रव । विश्वा च सोम सौ-
भगा ॥ इन्दो यथा तव स्तवो यथा ते जातमन्धसः । नि बर्हिषि प्रिये सदः ॥
उत नो गोविदश्ववित्पवस्व सोमान्धसा । मक्षूतमेभिरहभिः ॥ यो जिनाति न
जीयते हन्ति शत्रुमभीत्य । स पवस्व सहस्रजित् ॥ ५ ॥ यास्ते धारा मधुश्चु-
तोऽसृग्रमिन्द ऊतये । ताभिः पवित्रमासदः ॥ सो अर्षेन्द्राय पीतये तिरो वारा-
ण्यव्यया । सीदन्नृतस्य योनिमा ॥ त्वं सोम परिस्रव स्वादिष्ठो अङ्गिरोभ्यः ।
वरिवोविद् घृतं पयः ॥ ६ ॥ तव श्रियो वर्ष्यस्येव विद्युतोऽग्नेश्चिकित्र उषसा-
मिवेतयः । यदोषधीरभिसृष्टो वनानि च परि स्वयं चिनुषे अन्नमासनि ॥ वातो-
पजूत इषितो वशाँ अनु तृषु यदन्ना वेविषद्वितिष्ठसे । आ ते यतन्ते रथ्योऽ यथा
पृथक् शर्द्धांस्यग्ने अजरस्य धक्षतः ॥ मेधाकारं विदथस्य प्रसाधनमग्निं होतारं
परिभूतरं मतिम् । त्वामर्भस्य हविषः समानमित्त्वां महो वृणते नान्यन्त्वत् ॥ ७ ॥
पुरूरुणा चिद्ध्यस्त्यवो नूनं वां वरुण । मित्र वंसि वां सुमतिम् ॥ ता वां सम्य-
गद्रुह्वाणेषमश्याम धाम च । वयं वां मित्रा स्याम ॥ पातं नो मित्रा पायुभिरुत
त्रायेथां सुत्रात्रा । साह्याम दस्यूं तनूभिः ॥ ८ ॥ उत्तिष्ठन्नोजसा सह पीत्वा शिप्रे
अवेपयः । सोममिन्द्र चमूसुतम् ॥ अनु त्वा रोदसी उभे स्पर्धमानमददेताम् ।
इन्द्र यद्दस्युहाभवः ॥ वाचमष्टापदीमहं नवस्रक्तिमृतावृधम् । इन्द्रात्परि तन्वं ममे
॥ ९ ॥ इन्द्राग्नी युवामिमेऽभि स्तोमा अनूषत । पिबतं शम्भुवा सुतम् ॥ या-
वां सन्ति पुरुस्पृहो नियुतो दाशुषे नरा । इन्द्राग्नी ताभिरागतम् ॥ ताभिरा-
गच्छतं नरोपेदं सवनं सुतम् । इन्द्राग्नी सोमपीतये ॥ १० ॥ अर्षा सोम द्युमत्त-
मोऽभिद्रोणानि रोरुवत् । सीदन्योनौ वनेष्वा ॥ अप्सा इन्द्राय वायवे वरुणाय
मरुद्भ्यः । सोमा अर्षन्तु विष्णवे ॥ इषं तोकाय नो दधदस्मभ्यं सोम विश्वतः ।
आपवस्व सहस्रिणम् ॥ ११ ॥ सोम उष्वाणः सोतृभिरधिष्णुभिरवीनाम् । अश्व-
येव हरिता याति धारया मन्द्रया याति धारया ॥ अनूपे गोमान् गोभिरक्षाः सोमो

दुग्धाभिरक्षाः । समुद्रं न संवरणान्यग्मन्मन्दी मदाय तोशते ॥ १२ ॥ यत्सोम
चित्रमुक्थ्यं दिव्यं पार्थिवं वसु । तं नः पुनान आभर ॥ वृषा पुनान आयूंषि
स्तनयन्नधि बर्हिषि । हरिः सन्योनिमासदः ॥ युवं हि स्थः स्वः पती इन्द्रश्च
सोम गोपती । ईशाना पिप्यतं धियः ॥ १३ ॥ इन्द्रो मदाय वावृधे शवसे वृत्रहा
नृभिः । तमिन्महत्स्वाजिषूतिमर्भे हवामहे स वाजेषु प्रनोविषत् ॥ असि हि वीर
सेन्योऽसि भूरि परादद्दिः । असि दभ्रस्य चिद्वृधो यजमानाय शिक्षसि सुन्वते भूरि
ते वसु ॥ यदुदीरत आजयो धृष्णवे धीयते धनम् । युङ्क्ष्वामदच्युता हरी कं हनः
कं वसौ दधोऽस्माँ इन्द्र वसौ दधः ॥ १४ ॥ स्वादोरित्था विषूवतो मधोः पिबन्ति-
गौर्यः । या इन्द्रेण सयावरीर्वृष्णा मदन्ति शोभथा वस्वीरनु स्वराज्यम् ॥ ता अस्य पृश-
नायुवः सोमं श्रीणन्ति पृश्नयः । प्रिया इन्द्रस्य धेनवो वज्रं हिन्वन्ति सायकं वस्वीरनु
स्वराज्यम् ॥ ता अस्य नमसा सहः सपर्यन्ति प्रचेतसः । व्रतान्यस्य सश्चिरे पुरूणि
पूर्वचित्तये वस्वीरनु स्वराज्यम् ॥ १५ ॥ असाव्यंशुर्मदायाप्सु दक्षो गिरिष्ठाः । श्येनो न
योनिमासदत् ॥ शुभ्रमन्धो देववातमप्सु धौतं नृभिः सुतम् । स्वदन्ति गावः पयोभिः ॥
आदीमश्वं न हेतारमशूशुभन्नमृताय । मधो रसं सधमादे ॥ १६ ॥ अभि द्युम्नं बृहद्यश
इषस्पते दिदीहि देव देवयुम् । वि कोशं मध्यमं युव ॥ आवच्यस्व सुदक्ष चम्वोः
सुतो विशां वह्निर्न विश्पतिः । वृष्टिं दिवः पवस्व रीतिमपो जिन्वन् गविष्टये धियः
॥ १७ ॥ प्राणा शिशुर्महीनां हिन्वन्नृतस्य दीधितिम् । विश्वा परि प्रिया भुवदध
द्विता ॥ उप त्रितस्य पाष्योऽ३रभक्त यद्गुहा पदम् । यज्ञस्य सप्त धामभिरध प्रियम् ॥
त्रीणि त्रितस्य धारया पृष्ठेष्वैरयद्रयिम् । मिमीते अस्य योजना वि सुक्रतुः ॥ १८ ॥
पवस्व वाजसातये पवित्रे धारया सुतः इन्द्राय सोम विष्णवे देवेभ्यो मधुमत्तरः ॥
त्वां रिहन्ति धीतयो हरिं पवित्रे अद्रुहः । वत्सं जातं न मातरः पवमान विध-
र्मणि ॥ त्वं द्यां च महिव्रत पृथिवीं चाति जभ्रिषे । प्रति द्रापिममुञ्चथाः पव-
मान महित्वना ॥ १९ ॥ इन्दुर्वाजी पवते गोन्योघा इन्द्रे सोमः सह इन्वन्मदाय ।
हन्ति रक्षो बाधते पर्यरातिं वरिवस्कृण्वन्वृजनस्य राजा ॥ अध धारया मध्वा पृ-

चानस्तिरो रोम पवते अद्रिदुग्धः । इन्दुरिन्द्रस्य सख्यं जुषाणो देवो देवस्य मत्सरो मदाय ॥ अभि व्रतानि पवते पुनानो देवो देवान्त्स्वेन रसेन पृञ्चन् । इन्दुर्धर्माण्यृतुथा वसानो दश क्षिपो अव्यत सानो अव्ये ॥ २० ॥ आ ते अग्न इधीमहि द्युमन्तं देवाजरम् । यद्ध स्या ते पनीयसी समिद्दीदयति द्यवीषं स्तोतृभ्य आभर ॥ आ ते अग्न ऋचा हविः शुक्रस्य ज्योतिषस्पते । सुश्चन्द्र दस्म विश्पते हव्यवाट् तुभ्यं हूयत इषं स्तोतृभ्य आभर ॥ ओभे सुश्चन्द्र विश्पते दर्वी श्रीणीष आसनि । उतो न उत्पुपूर्या उक्थेषु शवसस्पत इषं स्तोतृभ्य आभर ॥ २१ ॥ इन्द्राय साम गायत विप्राय बृहते बृहत् । ब्रह्मकृते विपश्चिते पनस्यवे ॥ त्वमिन्द्राभिभूरसि त्वं सूर्यमरोचयः । विश्वकर्मा विश्वदेवो महाँ असि ॥ विभ्राजञ्ज्योतिषा स्वा३रगच्छो रोचनन्दिवः । देवास्त इन्द्र सख्याय येमिरे ॥ २२ ॥ असावि सोम इन्द्र ते शविष्ठ धृष्णवागहि । आ त्वा पृणक्त्विन्द्रियं रजः सूर्यो न रश्मिभिः ॥ आतिष्ठ वृत्रहन्रथं युक्ता ते ब्रह्मणा हरी । अर्वाचीनं सु ते मनो ग्रावा कृणोतु वग्नुना ॥ इन्द्रमिद्धरी वहतोऽप्रतिधृष्टशवसम् । ऋषीणां सुष्टुतीरुप यज्ञं च मानुषाणाम् ॥ २३ ॥

इति द्वितीयोऽर्धः प्रपाठकः तृतीयश्च

प्रपाठकः समाप्तः

# अथ चतुर्थः प्रपाठकः ॥

ऋषिः—१ आकृष्टामाषाः सिकतानिवावरी च । २, ११ कश्यपः । १२ सप्तर्षयः । १३ अमहीयुः । १४ शुनःशेप आजीगर्तिः । ३ मेधातिथिः । ४ हिरण्यस्तूपः । ५ अवत्सारः । ६ जमदग्निः । ७ कुत्स आंगिरसः । ८ वसिष्ठः । ९ त्रिशोकः काण्वः । १० श्यावाश्वः । १६ मांधाता यौवनाश्वः । १५ मधुच्छन्दा वैश्वामित्रः । १७ असितः काश्यपो देवलो वा । १८ ऋणचयः शाक्तः । १९ पर्वतनारदौ । २० मनुः सांवरणः । २१ कुत्सः । २२ बधुः सुबधुः श्रुतबधुर्विप्रबधुश्च गौपायना लौपायना वा । २३ भुवन आप्त्यः साधनो वा भौवनः ॥ देवता—१—६, ११—१३, १७—२१ पावमानः सोमः । ७, २२ अग्निः । १० इन्द्राग्नी, । ९, १४, १६ इन्द्रः । १५ सोमः । ८ आदित्यः । २३ विश्वेदेवाः ॥ छन्दः—१, ७ जगती । २–६, ८–११, १३, १४, १७ गायत्री । १२, १५, १८ बृहती । १६ महापङ्क्तिः । १८ गायत्री सतोबृहती च । १९ उष्णिक् । २० अनुष्टुप् । २१, २३ त्रिष्टुप् । २२ भुरिग्बृहती ॥ स्वरः—१, ७ निषादः । २–६, ८—११, १३, १४, १७ षड्जः । १२, १५, २२ मध्यमः । १६ पञ्चमः । १८ षड्जः मध्यमश्च । १९ ऋषभः । २० गान्धारः । २१, २३ धैवतः ॥

ज्योतिर्यज्ञस्य पवते मधु प्रियं पिता देवानां जनिता विभूवसुः । दधाति रत्नं स्वधयोरपीच्यं मदिन्तमो मत्सर इन्द्रियो रसः ॥ अभिक्रन्दन्कलशं वाज्यर्षति पतिर्दिवः शतधारो विचक्षणः । हरिर्मित्रस्य सदनेषु सीदति मर्मृजानोऽविभिः सिन्धुभिर्वृषा ॥ अग्रे सिन्धूनां पवमानो अर्षस्यग्रे वाचो अग्रियो गोषु गच्छसि । अग्रे वाजस्य भजसे महद्धनं स्वायुधः सोतृभिः सोम सूयसे ॥ १ ॥ असृक्षत प्र वाजिनो गव्या सोमासो अश्वया । शुक्रासो वीरयाशवः ॥ शुम्भमाना ऋतायुभिर्मृज्यमाना गभस्त्योः । पवन्ते वारे अव्यये ॥ ते विश्वा दाशुषे वसु सोमा दिव्यानि पार्थिवा । पवन्तामान्तरिक्ष्या ॥ २ ॥ पवस्व देववी-

रति पवित्रे सोम रंह्या । इन्द्रमिन्दो वृषाविश ॥ आवच्यस्व महि प्सरो वृषेन्दो
द्युम्नवत्तमः । आ योनिन्धर्णसिस्सदः ॥ अधुक्षत प्रियं मधु धारा सुतस्य
वेधसः । अपो वसिष्टसुक्रतुः ॥ महान्तं त्वामहीरन्वापो अर्षन्ति सिन्धवः ।
यद्गोभिर्वासयिष्यसे ॥ समुद्रो अप्सु मामृजे विष्टम्भो धरुणो दिवः । सोमः पवि-
त्रे अस्मयुः ॥ अचिक्रदद्वृषा हरिर्महान्मित्रो न दर्शतः । सं सूर्येण दिद्युते ॥ गि-
रस्त इन्द्र ओजसा मर्मृज्यन्ते अपस्युवः । याभिर्मदाय शुम्भसे ॥ तन्त्वा मदाय
घृष्वय उ लोककृत्नुमीमहे । तव प्रशस्तये महे ॥ गोषा इन्दो नृषा अस्यश्वसा
वाजसा उत । आत्मा यज्ञस्य पूर्व्यः ॥ अस्मभ्यमिन्दविन्द्रियं मधोः पवस्व धारया ।
पर्जन्यो वृष्टिमां इव ॥ ३ सना च सोम जेषि च पवमान महिश्रवः । अथा
नो वस्यसस्कृधि ॥ सना ज्योतिः सना स्वा३र्विश्वा च सोम सौभगा । अथा नो
वस्यसस्कृधि ॥ सना दक्षमुत क्रतुमप सोम मृधो जहि । अथा नो वस्यसस्कृधि ॥
पवीतारः पुनीत न सोममिन्द्राय पातवे । अथा नो वस्यसस्कृधि ॥ त्वं सूर्ये न
आभज तव क्रत्वा तवोतिभिः । अथा नो वस्यसस्कृधि ॥ तव क्रत्वा तवोतिभिर्ज्योक्
पश्येम सूर्यम् । अथा नो वस्यसस्कृधि ॥ अभ्यर्ष स्वायुध सोम द्विबर्हसं रयिम् ।
अथा नो वस्यसस्कृधि ॥ अभ्या३र्षानपच्युतो वाजिन्त्समत्सु सासहिः । अथा
नो वस्यसस्कृधि ॥ त्वां यज्ञैरवीवृधन् पवमान विधर्मणि । अथा नो वस्यसस्कृधि ॥
रयिं नश्चित्रमश्विनमिन्दो विश्वायुमाभर । अथा नो वस्यसस्कृधि ॥ ४ ॥ तरत्स
मन्दी धावति धारा सुतस्यान्धसः । तरत्स मन्दी धावति ॥ उस्रा वेद वसूनां मर्तस्य
देव्यवसः । तरत्स मन्दी धावती ॥ ध्वस्रयोः पुरुषन्त्योरा सहस्राणि दद्महे । तरत्स म-
न्दी धावति ॥ आ ययोस्त्रिंशतं तना सहस्राणि च दद्महे । तरत्स मन्दी धावति ॥५॥
एते सोमा असृक्षत गृणानाः शवसे महे । मदिन्तमस्य धारया ॥ अभि गव्यानि वी-
तये नृम्णा पुनानो अर्षसि । सनद्वाजः परिस्रव ॥ उत नो गोमतीरिषो विश्वा
अर्ष परिष्टुभः । गृणानो जमदग्निना ॥ ६ ॥ इमं स्तोममर्हते जातवेदसे रथमि-
व सम्महेमा मनीषया । भद्रा हि नः प्रमतिरस्य संसद्यग्ने सख्ये मा रिषामा वयं

तव ॥ भरामेध्मं कृणवामा हवींषि ते चितयन्तः पर्वणापर्वणा वयम् । जीवातवे
प्रतरां साधया धियोऽग्ने सख्ये मारिषामा वयं तव ॥ शकेम त्वा समिधं साधया
धियस्त्वे देवा हविरदन्त्याहुतम् । त्वमादित्याँ आवह तान्ह्यु३श्मस्यग्ने सख्ये मा-
रिषामा वयन्तव ॥ ७ ॥ प्रतिवां सूर उदिते मित्रं गृणीषे वरुणम् । अर्यमणं रि-
शादसम् ॥ राया हिरण्यया मतिरियमवृकाय शवसे । इयं विप्रा मेधसातये ॥
ते स्याम देव वरुण तेमित्रसूरिभिः सह । इषं स्वश्चधीमहि ॥ ८ ॥ भिन्धि वि-
श्वाअपद्विषः परिबाधो जही मृधः । वसु स्पार्हं तदाभर ॥ यस्य ते विश्वमानुषग्भू-
रेर्दत्तस्य वेदति । वसु स्पार्हन्तदा भर ॥ यद्वीडाविन्द्रयत् स्थिरे यत्पर्शाने परा-
भृतम् । वसु स्पार्हं तदाभर ॥ ९ ॥ यज्ञस्य हि स्थ ऋत्विजा सस्नी वाजेषु क-
र्मसु । इन्द्राग्नी तस्य बोधतम् ॥ तोशासा रथयावानावृत्रहणापराजिता । इन्द्रा-
ग्नी तस्य बोधतम् ॥ इदं वां मदिरं मध्वधुक्षन्नद्रिभिर्नरः । इन्द्राग्नी तस्य बोध-
तम् ॥ १० ॥ इन्द्रायेन्दो मरुत्वते पवस्व मधुमत्तमः । अर्कस्य योनिमासदम् ॥
तन्त्वाविप्रावचो विदः परिष्कृण्वन्ति धर्णसिम् । सन्त्वा मृजन्त्यायवः ॥ रसं ते
मित्रो अर्यमा पिबन्तु वरुणः कवे । पवमानस्य मरुतः ॥ ११ ॥ मृज्यमानः सुह-
स्त्या समुद्रे वाचमिन्वसि । रयिं पिशङ्गं बहुलं पुरुस्पृहं पवमानाभ्यर्षसि ॥ पुना-
नो वारे पवमानो अव्यये वृषो अचिक्रदद्वने । देवानां सोम पवमान निष्कृतं गो-
भिरञ्जानो अर्षसि ॥ १२ ॥ एतमुत्यं दश क्षिपो मृजन्ति सिन्धुमातरम् । समा-
दित्येभिरख्यत ॥ समिन्द्रेणोत वायुना सुत एति पवित्र आ । सं सूर्यस्य रश्मि-
भिः ॥ स नो भगाय वायवे पूष्णे पवस्व मधुमान् । चारुर्मित्रे वरुणे च ॥१३॥
रेवतीर्नः सधमाद इन्द्रे सन्तु तुविवाजाः । क्षुमन्तो याभिर्मदेम ॥ आ घ त्वावा-
न्त्मना युक्तस्तोतृभ्यो धृष्णवीयानः । ऋणोरक्षं न चक्र्योः ॥ आयद् वः श-
तक्रतवाकामं जरितॄणाम् । ऋणोरक्षं न शचीभिः ॥ १४ ॥ सुरूपकृत्नुमूतये सु-
दुघामिव गोदुहे । जुहूमसि द्यविद्यवि ॥ उप नः सवनागहि सोमस्य सोमपाः पिब ।
गोदा इद्रेवतो मदः ॥ अथा ते अन्तमानां विद्याम सुमतीनाम् । मा नो अति-

स्थ आगहि ॥ १५ ॥ उभे यदिन्द्र रोदसी आपप्राथोषा इव । महान्तं त्वा मही-
नां सम्राजं चर्षणीनाम् । देवी जनित्र्यजीजनद्भद्रा जनित्र्यजीजनत् ॥ दीर्घं
ह्यङ्कुशं यथा शक्तिं बिभर्षि मन्तुमः । पूर्वेण मघवन् पदा वयामजो यथा यमः ।
देवी जनित्र्यजीजनद्भद्रा जनित्र्यजीजनत् ॥ अव स्म दुर्हृणायतो मर्त्तस्य तनुहि
स्थिरम् । अधस्पदं तमीं कृधि यो अस्माँ अभिदासति । देवी जनित्र्यजीजनद्भद्रा
जनित्र्यजीजनत् ॥ १६ ॥ परिस्वानो गिरिष्ठाः पवित्रे सोमो अक्षरत् । मदेषु
सर्वधा असि ॥ त्वं विप्रस्त्वं कविर्मधु प्रजातमन्धसः । मदेषु सर्वधा असि ॥ त्वे
विश्वे सजोषसो देवासः पीतिमाशत । मदेषु सर्वधा असि ॥ १७ ॥ स सुन्वे यो
वसूनां यो रायामानेता य इडानाम् । सोमो यः सुक्षितीनाम् ॥ यस्य त इन्द्रः
पिबाद्यस्य मरुतो यस्य वार्यमणा भगः । आ येन मित्रावरुणा करामह एन्द्रमवसे
महे ॥ १८ ॥ तं वः सखायो मदाय पुनानमभिगायत । शिशुं न हव्यैः स्वदयन्त
गूर्तिभिः ॥ सं वत्स इव मातृभिरिन्दुर्हिन्वानो अज्यते । देवावीर्मदो मतिभिः परि-
ष्कृतः ॥ अयं दक्षाय साधनोऽयं शर्धाय वीतये । अयं देवेभ्यो मधुमत्तरः सुतः
॥ १९ ॥ सोमाः पवन्त इन्दवोऽस्मभ्यं गातुवित्तमाः । मित्राः स्वाना अरेपसः
स्वाध्यः स्वर्विदः ॥ ते पूतासो विपश्चितः सोमासो दध्याशिरः । सूरासो न दर्श-
तासो जिगत्नवो ध्रुवा घृते ॥ सुष्वाणासो व्यद्रिभिश्चिताना गोरधि त्वचि ।
इषमस्मभ्यमभितः समस्वरन्वसुविदः ॥ २० ॥ अया पवा पवस्वैना वसूनि मां-
श्चत्व इन्दो सरसि प्र धन्व । ब्रध्नश्चिद्यस्य वातो न जूतिं पुरुमेधाश्चित्तकवे नरं
धात् ॥ उत न एना पवया पवस्वाधि श्रुते श्रवाय्यस्य तीर्थे । षष्टिं सहस्रा नैगुतो वसू-
नि वृक्षं न पक्वं धूनवद्रणाय ॥ महीमे अस्य वृष नाम शूषे मांश्चत्वे वा पृशने वा
वधत्रे । अस्वापयन्निगुतः स्नेहयच्चापामित्राँ अपाचितो अचेतः ॥ २१ ॥ अग्ने त्वं
नो अन्तम उत त्राता शिवो भुवो वरूथ्यः ॥ वसुरग्निर्वसुश्रवा अच्छा नक्षि द्यु-
मत्तमो रयिं दाः ॥ तं त्वा शोचिष्ठ दीदिवः सुम्नाय नूनमीमहे सखिभ्यः ॥ २२ ॥

इमा नु कं भुवना सीषधेमेन्द्रश्च विश्वे च देवाः ॥ यज्ञं च नस्तन्वं च प्रजां चादित्यैरिन्द्रः सह सीषधातु ॥ आदित्यैरिन्द्रः सगणो मरुद्भिरस्मभ्यं भेषजा करत् ॥ २ ॥ प्रवार्चोष ॥ १४ ॥

इति प्रथमोऽर्धः प्रपाठकः

ऋषिः—१ वृषगणो वासिष्ठः । २, ३ असितः काश्यपो देवलो वा । ४, १३ भृगुर्वारुणिर्जमदग्निर्वा । ५, ८ भरद्वाजो बार्हस्पत्यः । ६ यजत आत्रेयः । ७ मधुच्छन्दो वैश्वामित्रः । ९ सिकता निवावरी । १० पुरुहन्मा । ११ पर्वतानारदौ शिखण्डिन्यौ वाऽप्सरसौ काश्यप्यावप्सरसौ । १२ अग्नयो धिष्ण्यैश्वराः । १४ वत्सः काण्वः । १५ नृमेधः । १६ अत्रिः ॥ देवता—१—४, ९, ११—१३ पवमानः सोमः । ५ वैश्वानरः । ६ मित्रावरुणौ । ७, १०, १५, १६ इन्द्रः । ८ इन्द्राग्नी । १४ अग्निः ॥ छन्दः–१, ५, १३—१५ त्रिष्टुप् । २—४, ६—८ गायत्री । ९ जगती । १० प्रागाथं । ११ उष्णिक् । १२ आर्ची भुरिग्गायत्री । १६ अनुष्टुप् ॥ स्वरः–१, ५, १३–१५ धैवतः । २—४, ६—८, १२ षड्जः । ९ निषादः । १० मध्यमः । ११ ऋषभः । १६ गान्धारः ॥

प्र काव्यमुशनेव ब्रुवाणो देवो देवानां जनिमा विवक्ति । महिव्रतः शुचिबन्धुः पावकः पदा वराहो अभ्येति रेभन् ॥ प्र हंसासस्तृपलं वग्नुमच्छामादस्तं वृषगणा अयासुः । आङ्गोषिणं पवमानं सखायो दुर्मर्षं वाणं प्र वदन्ति साकम् ॥ स योजत उरुगायस्य जूतिं वृथा क्रीडन्तं मिमते न गावः । परीणसं कृणुते तिग्मशृङ्गो दिवा हरिर्ददृशे नक्तमृज्रः ॥ प्र स्वानासो रथा इवार्वन्तो न श्रवस्यवः । सोमासो राये अक्रमुः ॥ हिन्वानासो रथा इव दधन्विरे गभस्त्योः । भरासः कारिणामिव ॥ राजानो न प्रशस्तिभिः सोमासो गोभिरञ्जते । यज्ञो न सप्त धातृभिः ॥ परि स्वानास इन्दवो मदाय बर्हणा गिरा । मधो अर्षन्ति धारया ॥ आपा

नासौ विवस्वतो जिन्वन्त उषसो भगम् । सूरा अण्वं वितन्वते ॥ अपद्वारा मतीनां
प्रत्ना ऋण्वन्ति कारवः । वृष्णो हरस आयवः ॥ समीचीनास आशत होतारः
सप्तजानयः । पदमेकस्य पिप्रतः ॥ नाभा नाभिं न आददे चक्षुषा सूर्यं दृशे ।
कवेरपत्यमादुहे ॥ अभि प्रियं दिवस्पदमध्वर्युभिर्गुहा हितम् । सूरः पश्यति चक्षसा
॥ १ ॥ असृग्रमिन्दवः पथा धर्मन्नृतस्य सुश्रियः । विदाना अस्य योजना ॥ प्र
धारा मध्वो अग्रियो महीरपो विगाहते । हविर्हविःषु वन्द्यः ॥ प्र युजा वाचो अग्रियो
वृषो अचिक्रदद्वने । सद्माभि सत्यो अध्वरः ॥ परि यत्काव्या कविर्नृम्णा पुनानो
अर्षति । स्वर्वाजी सिषासति ॥ पवमानो अभिस्पृधो विशो राजेव सीदति ।
यदीमृण्वन्ति वेधसः ॥ अव्या वारे परि प्रियो हरिर्वनेषु सीदति । रेभो वनुष्यते
मती ॥ स वायुमिन्द्रमश्विना साकं मदेन गच्छति । रणा यो अस्य धर्मणा ॥
आ मित्रे वरुणे भगे मध्वः पवन्त ऊर्मयः । विदाना अस्य शक्मभिः ॥ अस्मभ्यं
रोदसी रयिं मध्वो वाजस्य सातये । श्रवो वसूनि संजितम् ॥ आ ते दक्षं
मयोभुवं वह्निमद्या वृणीमहे । पान्तमा पुरुस्पृहम् ॥ आ मन्द्रमा वरेण्यमा विप्रमा म-
नीषिणम् । पान्तमा पुरुस्पृहम् ॥ आ रयिमा सुचेतुनमा सुक्रतो तनूष्वा । पान्तमा-
पुरुस्पृहम् ॥ २ ॥ मूर्धानं दिवो अरतिं पृथिव्या वैश्वानरमृत आ जातमग्निम् ।
कविं सम्राजमतिथिं जनानामासन्नः पात्रं जनयन्त देवाः ॥ त्वां विश्वे अमृत
जायमानं शिशुं न देवा अभि सं नवन्ते । तव क्रतुभिरमृतत्वमायन् वैश्वानर
यत्पित्रोरदीदे ॥ नाभिं यज्ञानां सदनं रयीणां महामाहावमभि सं नवन्त । वैश्वा-
नरं रथ्यमध्वराणां यज्ञस्य केतुं जनयन्त देवाः ॥ ३ ॥ प्र वो मित्राय गायत वरु-
णाय विपा गिरा । महिक्षत्रावृतं बृहत् ॥ सम्राजा या घृतयोनी मित्रश्चोभा वरु-
णश्च । देवा देवेषु प्रशस्ता ॥ ता नः शक्तं पार्थिवस्य महो रायो दिव्यस्य । महि
वां क्षत्रं देवेषु ॥ ४ ॥ इन्द्रा याहि चित्रभानो सुता इमे त्वायवः । अण्वीभिस्तना
पूतासः ॥ इन्द्रा याहि धियेषितो विप्रजूतः सुतावतः । उप ब्रह्माणि वाघतः ॥ इन्द्रा-

याहि तूतुजान उप ब्रह्माणि हरिवः । सुते दधिष्व नश्चनः ॥ ५ ॥ तमीळिष्व यो
अर्चिषा वना विश्वा परिष्वजत् । कृष्णा कृणोति जिह्वया ॥ य इद्ध आविवा-
सति सुम्नमिन्द्रस्य मर्त्यः । द्युम्नाय सुतरा अपः ॥ तानो वाजवतीरिष आशून्
पिपृतमर्वतः । एन्द्रमग्निं च वोढवे ॥ ६ ॥ प्रो अयासीदिन्दुरिन्द्रस्य निष्कृतं
सखा सख्युर्न प्रमिनाति सङ्गिरम् । मर्य इव युवतिभिः समर्षति सोमः कलशे
शतयामना पथा ॥ प्र वो धियो मन्द्रयुवो विपन्युवः पनस्युवः संवरणेष्वक्रमुः ।
हरिं क्रीडन्तमभ्यनूषत स्तुभोऽभि धेनवः पयसेदशिश्रयुः ॥ आ नः सोम संयतं
पिप्युषीमिषमिन्दो पवस्व पवमान ऊर्मिणा । या नो दोहते त्रिरहन्नसश्चुषी क्षुम-
द्वाजवन्मधुमत्सुवीर्यम् ॥ ७ ॥ नकिष्टं कर्मणा नशद्यश्चकार सदावृधम् । इन्द्रं न
यज्ञैर्विश्वगूर्तमृभ्वसमधृष्टं धृष्णुमोजसा ॥ अषाढमुग्रं पृतनासु सासहिं यस्मिन्म-
हीरुरुज्रयः । सं धेनवो जायमाने अनोनवुर्द्यावः क्षामीरनोनवुः ॥ ८ ॥ सखाय
आ निषीदत पुनानाय प्रगायत । शिशुं न यज्ञैः परिभूषत श्रिये ॥ समी वत्सं न
मातृभिः सृजता गयसाधनम् । देवाव्यं३मदमभिद्विशवसम् ॥ पुनाता दक्षसा-
धनं यथा शर्धाय वीतये । यथा मित्राय वरुणाय शन्तमम् ॥ ९ ॥ प्र वाज्यक्षाः
सहस्रधारस्तिरः पवित्रं विवारमव्यम् ॥ स वाज्यक्षाः सहस्ररेता अद्भिर्मृजानो
गोभिः श्रीणानः ॥ प्र सोम याहीन्द्रस्य कुक्षा नृभिर्येमाणो अद्रिभिः सुतः ॥ १० ॥
ये सोमासः परावति ये अर्वावति सुन्विरे । ये वादः शर्यणावति ॥ य आर्जीकेषु
कृत्वसु ये मध्ये पस्त्यानाम् । ये वा जनेषु पञ्चसु ॥ ते नो वृष्टिं दिवस्परि पव-
न्तामा सुवीर्यम् । स्वाना देवास इन्दवः ॥ ११ ॥ आ ते वत्सो मनो यमत्परमा-
च्चित्सधस्थात् । अग्ने त्वां कामये गिरा ॥ पुरुत्रा हि सदृङ्ङसि दिशो विश्वा
अनु प्रभुः । समत्सु त्वा हवामहे ॥ समत्स्वग्निमवसे वाजयन्तो हवामहे । वाजेषु
चित्रराधसम् ॥ १२ ॥ त्वं न इन्द्राभर ओजो नृम्णं शतक्रतो विचर्षणे । आवीरं
पृतनासहम् ॥ त्वं हि नः पिता वसो त्वं माता शतक्रतो बभूविथ । अधा ते सुम्नमी

महे ॥ त्वां शुष्मिन्पुरुहूत वाजयन्तमुपब्रुवे सहस्कृत । स नो रास्व सुवीर्यम् ॥ १३ ॥ यदिन्द्र चित्र म इहनास्ति त्वादातमद्रिवः । राधस्तन्नो विदद्वस उभया हस्त्या भर ॥ यन्मन्यसे वरेण्यमिन्द्र द्युक्षं तदा भर । विद्याम तस्य ते वयमकूपारस्य दावनः ॥ यत्ते दित्सु प्रराध्यं मनो अस्ति श्रुतं बृहत् । तेन दृढा चिदद्रिव आ वाजं दर्षि सातये ॥ १४ ॥

इति द्वितीयोऽर्धः प्रपाठकः चतुर्थश्च

प्रपाठकः समाप्तः

# अथ पञ्चमः प्रपाठकः ॥

ऋषिः—१ प्रतर्दनो दैवोदासिः । २–४ असितः काश्यपो देवलो वा । ५, ११ उचथ्यः । ६, ७ अमहीयुः । ८, १५ निध्रुविः काश्यपः । ९ वसिष्ठः । १० सुकक्षः । १२ कविः । १३ देवातिथिः काण्वः । १४ भर्गः प्रागाथः । १६ अंबरीष ऋजिश्वा । १७ अग्नयो धिष्ण्या ऐश्वराः । १८ उशना काव्यः । १९ नृमेधः । २० जेता माधुच्छन्दसः ॥ देवता—१–८, ११, १२, १५–१७ पवमानः सोमः । ९, १८ अग्निः । १०, १३, १४, १६, २० इन्द्रः ॥ छन्दः—१–८, १०, ११, १५, १८ गायत्री । ९ त्रिष्टुप् । १२ जगती । १३, १४ प्रागाथं । १६, २० अनुष्टुप् । १७ द्विपदा पङ्क्तिः । १९ उष्णिक् ॥ स्वरः—१–८, १०, ११, १५, १८ षड्जः । ९ धैवतः । १२ निषादः । १३, १४ मध्यमः । १६, २० गान्धारः । १७ पञ्चमः । १९ ऋषभः ॥

शिशुं जज्ञानं हर्यतं मृजन्ति शुम्भन्ति विप्रं मरुतो गणेन । कविर्गीर्भिः काव्येन कविः सन्त्सोमः पवित्रमत्येति रेभन् ॥ ऋषिमना य ऋषिकृत्स्वर्षाः सहस्रनीथः पदवीः कवीनाम् । तृतीयं धाम महिषः सिषासन्त्सोमो विराजमनु राजति ष्टुप् ॥ चमूषच्छ्येनः शकुनो विभृत्वा गोविन्दुर्द्रप्स आयुधानि बिभ्रत् । अपामूर्मिं सचमानः समुद्रं तुरीयं धाम महिषो विवक्ति ॥ १ ॥ एते सोमा अभि प्रियमिन्द्रस्य काममक्षरन् । वर्धन्तो अस्य वीर्यम् ॥ पुनानासश्चमूषदो गच्छन्तो वायुमश्विना । ते नो धत्त सुवीर्यम् ॥ इन्द्रस्य सोम राधसे पुनानो हार्दि चोदय । देवानां योनिमासदम् ॥ मृजन्ति त्वा दश क्षिपो हिन्वन्ति सप्त धीतयः । अनु विप्रा अमादिषुः ॥ देवेभ्यस्त्वा मदाय कं सृजानमति मेष्यः । सं गोभिर्वासयामसि ॥ पुनानः कलशेष्वा वस्त्राण्यरुषो हरिः । परि गव्यान्यव्यत ॥ मघोन आप-

वस्वनो जहि विश्वा अपद्विषः । इन्दो सखायमाविश ॥ नृचक्षसं त्वा वयमिन्द्रपीतं
स्वर्विदम् । भक्षीमहि प्रजामिषम् ॥ वृष्टिं दिवः परिस्रव द्युम्नं पृथिव्या अधि ।
सहो नः सोमपृत्सुधाः ॥ २ ॥ सोम पुनानो अर्षति सहस्रधारो अत्यविः । वायो-
रिन्द्रस्य निष्कृतम् ॥ पवमानमवस्यवो विप्रमभिप्रगायत । सुष्वाणं देववीतये ॥
पवन्ते वाजसातये सोमाः सहस्रपाजसः । गृणाना देववीतये ॥ उत नो वाजसा-
तये पवस्व बृहतीरिषः । द्युमदिन्दो सुवीर्यम् ॥ अत्या हियाना न हेतृभिरसृग्रं वा-
जसातये । विवारमव्यमाशवः ॥ ते नः सहस्रिणं रयिं पवन्तामा सुवीर्यम् । स्वाना
देवास इन्दवः ॥ वाश्रा अर्षन्तीन्दवोऽभि वत्सं न मातरः । दधन्विरे गभस्त्योः ॥
जुष्ट इन्द्राय मत्सरः पवमान कनिक्रदत् । विश्वा अप द्विषो जहि ॥ अपघ्नन्तो
अराव्णः पवमानाः स्वर्दृशः । योनावृतस्य सीदत ॥ ३ ॥ सोमा असृग्रमिन्दवः
सुता ऋतस्य धारया । इन्द्राय मधुमत्तमाः ॥ अभि विप्रा अनूषत गावो वत्सं न
धेनवः । इन्द्रं सोमस्य पीतये ॥ मदच्युत्क्षेति सादने सिन्धोरूर्मा विपश्चित् । सोमो
गौरी अधिश्रितः ॥ दिवो नाभा विचक्षणोऽव्यो वारे महीयते । सोमो यः सुक्रतुः
कविः ॥ यः सोमः कलशेष्वा अन्तः पवित्र आहितः । तमिन्दुः परिषस्वजे ॥
प्र वाचमिन्दुरिष्यति समुद्रस्याधि विष्टपि । जिन्वन्कोशं मधुश्चुतम् ॥ नित्य-
स्तोत्रो वनस्पतिर्धेनामन्तः सबर्दुघाम् । हिन्वानो मानुषा युजा ॥ आ पवमान धारय
रयिं सहस्रवर्चसम् । अस्मे इन्दो स्वाभुवम् ॥ अभि प्रिया दिवः कविर्विप्रः स
धारया सुतः । सोमो हिन्वे परावति ॥ ४ ॥ उत शुष्मास ईरते सिन्धोरूर्मेरिव
स्वनः । वाणस्य चोदया पविम् ॥ प्रसवे त उदीरते तिस्रो वाचो मखस्युवः । य-
दव्य एषि सानवि ॥ अव्यावारैः परि प्रियं हरिं हिन्वन्त्यद्रिभिः । पवमानं मधु-
श्चुतम् ॥ आपवस्व मदिन्तम पवित्रं धारया कवे । अर्कस्य योनिमासदम् ॥ स
पवस्व मदिन्तम गोभिरञ्जानो अक्तुभिः । एन्द्रस्य जठरं विश ॥ ५ ॥ अया
वीती परिस्रव यस्त इन्दो मदेष्वा । अवाहन्नवतीर्नव ॥ पुरः सद्य इत्थाधिये दिवो-
दासाय शंबरम् । अध त्यं तुर्वशं यदुम् ॥ परि नो अश्वमश्वविद्गोमदिन्दो हिरण्यवत् ।

वरा सहस्रिणीरिषः ॥ ६ ॥ अपघ्नन् पवते मृधोऽप सोमो अराव्णः । गच्छन्निन्द्रस्य
निष्कृतम् ॥ महो नो राय आभर पवमान जही मृधः । रास्वेन्दो वीरवद्यशः ॥
न त्वा शतं च न ह्रुतो राधो दित्सन्तमामिनन् । यत्पुनानो मखस्यसे ॥ ७ ॥
अया पवस्व धारया यया सूर्यमरोचयः । हिन्वानो मानुषीरपः ॥ अयुक्त सूर
एतशं पवमानो मनावधि । अन्तरिक्षेण यातवे ॥ उत त्या हरितो रथे सूरो अ-
युक्त यातवे । इन्दुरिन्द्र इति ब्रुवन् ॥ ८ ॥ अग्निं वो देवमग्निभिः सजोषा य-
जिष्ठं दूतमध्वरे कृणुध्वम् । यो मर्त्येषु निध्रुविर्ऋतावा तपुर्मूर्द्धा घृतान्नः पावकः ॥
प्रोथदश्वो न यवसे विष्यन् यदा महः संवरणाद्व्यस्थात् । आदस्य वातो अनुवाति
शोचिरध स्म ते व्रजनं कृष्णमस्ति ॥ उद्यस्य ते नवजातस्य वृष्णोऽग्ने चरन्त्य-
जरा इधानाः । अच्छा द्यामरुषो धूम एषि सं दूतो अग्न ईयसे हि देवान् ॥ ९ ॥ त-
मिन्द्रं वाजयामसि महे वृत्राय हन्तवे । स वृषा वृषभो भुवत् ॥ इन्द्रः स दामने
कृत ओजिष्ठः स बले हितः । द्युम्नी श्लोकी स सोम्यः ॥ गिरा वज्रो न स-
म्भृतः स बलो अनपच्युतः । ववक्ष उग्रो अस्तृतः ॥ १० ॥ अध्वर्यो अद्रिभिः
सुतं सोमं पवित्र आनय । पुनाहीन्द्राय पातवे ॥ तव त्य इन्दो अन्धसो देवा म-
धोर्व्याशत । पवमानस्य मरुतः ॥ दिवः पीयूषमुत्तमं सोममिन्द्राय वज्रिणे । सु-
नोता मधुमत्तमम् ॥ ११ ॥ धर्त्ता दिवः पवते कृत्व्यो रसो दक्षो देवानामनुमाद्यो
नृभिः । हरिः सृजानो अत्यो न सत्वभिर्वृथा पाजांसि कृणुषे नदीष्वा ॥ शूरो
न धत्त आयुधा गभस्त्योः स्वाः सिषासन् रथिरो गविष्टिषु । इन्द्रस्य शुष्ममीरय-
न्नपस्युभिरिन्दुर्हिन्वानो अज्यते मनीषिभिः ॥ इन्द्रस्य सोम पवमान ऊर्मिणा तवि-
ष्यमाणो जठरेष्वाविश । प्र नः पिन्व विद्युदभ्रेव रोदसी धिया नो वाजाँ उपमाहि
शश्वतः ॥ १२ ॥ यदिन्द्र प्रागपागुदङ्न्यग्वा हूयसे नृभिः । सिमा पुरू नृषूतो अ-
स्यानवेऽसि प्रशर्द्ध तुर्वशे ॥ यद्वा रुमे रुशमे श्यावके कृप इन्द्र मादयसे सचा ।
कण्वासस्त्वा स्तोमेभिर्ब्रह्मवाहस इन्द्रा यच्छन्त्या गहि ॥ १३ ॥ उभयं शृणवच्च
न इन्द्रो अर्वागिदं वचः । सत्राच्या मघवान्त्सोमपीतये धिया शविष्ठ आगमत् ॥

त्वं हि स्वराजं वृषभं तमोजसा धिषणे निष्टतक्षतुः । उतोपमानां प्रथमो निषीदसि सोमकामं हि ते मनः ॥ १४ ॥ पवस्व देव आयुषगिन्द्रं गच्छतु ते मदः । वायुमारोह धर्मणा ॥ पवमान नितोशसे रयिं सोम श्रवाय्यम् । इन्दो समुद्रमाविश ॥ अपघ्नन् पवसे मृधः क्रतुवित्सोम मत्सरः । नुदस्वादेवयुं जनम् ॥ अभी नो वाजसातमं रयिमर्षशतस्पृहम् । इन्दो सहस्रभर्णसन्तु विद्युम्नं विभासहम् ॥ १५ ॥ अभी नो वाजसातमम् । वयं ते अस्य राधसो वसोर्वसो पुरुस्पृहः ॥ नि नेदिष्ठतमा इषः स्याम सुम्ने ते अध्रिगो ॥ परिस्यस्वानो अक्षरदिन्दुरव्ये मदच्युतः ॥ धारा य ऊर्ध्वो अध्वरे भ्राजा न याति गव्ययुः ॥ १६ ॥ पवस्व सोम महान्त्समुद्रः पिता देवानां विश्वाभि धाम ॥ शुक्रः पवस्व देवेभ्यः सोम दिवे पृथिव्यै शं च प्रजाभ्यः ॥ दिवो धर्तासि शुक्रः पीयूषः सत्ये विधर्मन्वाजी पवस्व ॥ १७ ॥ प्रेष्ठं वो अतिथिं स्तुषे मित्रमिव प्रियम् । अग्ने रथन्न वेद्यम् ॥ कविमिव प्रशंस्यं यं देवास इति द्विता । निमर्त्येष्वादधुः ॥ त्वं यविष्ठ दाशुषो नॄःपाहि शृणुही गिरः । रक्षा तोकमुत त्मना ॥ १८ ॥ एन्द्र नो गधि प्रिय सत्राजिदगोह्य । गिरिर्न विश्वतः पृथुः पतिर्दिवः ॥ अभि हि सत्य सोमपा उभे बभूथ रोदसी । इन्द्रासि सुन्वतो वृधः पतिर्दिवः ॥ त्वं हि शश्वतीनामिन्द्र धर्ता पुरामसि । हन्ता दस्योर्मनोर्वृधः पतिर्दिवः ॥ १९ ॥ पुरां भिन्दुर्युवा कविरमितौजा अजायत इन्द्रो विश्वस्य कर्मणो धर्ता वज्री पुरुष्टुतः ॥ त्वं वलस्य गोमतोऽपावरद्रिवो बिलम् । त्वां देवा अबिभ्युषस्तुज्यमानास आविषुः ॥ इन्द्रमीशानमोजसाभि स्तोमैरनूषत । सहस्रं यस्य रातय उत वा सन्ति भूयसीः ॥ २० ॥

इति प्रथमोऽर्धः प्रपाठकः

ऋषिः—१ पराशरः । २ शुनःशेपः । ३ असितः काश्यपो देवलो वा । ४, ७ राहूगणः । ५, ६ नृमेधः प्रियमेधश्च । ८ पवित्रो वसिष्ठो वोभौ वा । ९ वसिष्ठः । १० वत्सः काण्वः । ११ शतं वैखानसः । १२ सप्तर्षिः । १३ वसुर्भारद्वाजः । १४ नृमेधः । १५ भर्गः प्रागाथः । १६ भरद्वाजः । १७ मनुराप्सवः । १८ अग्निरीष

ऋजिश्वा च । १९ अग्नयो धिष्ण्या ऐश्वराः । २० अमहीयुः । २१ त्रिशोकः काण्वः । २२ गोतमो राहूगणः । २३ मधुच्छन्दो वैश्वामित्रः ॥ देवता—१–७, ११–१३, १६–२० पवमानः सोमः । ८ पवमान्यध्येतृस्तुतिः । ९ अग्निः । १०, १४, १५, २१—२३ इन्द्रः ॥ छन्दः—१, ९ त्रिष्टुप् । २—७, १०, ११, १६, २०, २१ गायत्री । ८, १८, २३ अनुष्टुप् । १३ जगती । १४ निचृद्बृहती । १५ प्रागाथं । १७, २२ उष्णिक् । १२, १९ द्विपदा पंक्तिः ॥ स्वरः—१, ९ धैवतः । २—७, १०, ११, १६, २०, २१ षड्जः । ८, १८, २३ गान्धारः । १३ निषादः । १४, १५ मध्यमः । १२, १९ पञ्चमः । १७, २२ ऋषभः ॥

अक्रान्त्समुद्रः प्रथमे विधर्मन् जनयन् प्रजा भुवनस्य गोपाः । वृषा पवित्रे अधि सानो अव्ये बृहत्सोमो वावृधे स्वानो अद्रिः ॥ मत्सि वायुमिष्टये राधसे नो मत्सि मित्रावरुणा पूयमानः । मत्सि शर्धो मारुतं मत्सि देवान् मत्सि द्यावापृथिवी देव सोम ॥ महत्तत्सोमो महिषश्चकारापां यद्गर्भोऽवृणीत देवान् । अदधादिन्द्रे पवमान ओजोऽजनयत्सूर्ये ज्योतिरिन्दुः ॥ १ ॥ एष देवो अमर्त्यः पर्णवीरिव दीयते । अभि द्रोणान्यासदम् ॥ एष विप्रैरभिष्टुतोऽपो देवो विगाहते । दधद्रत्नानि दाशुषे ॥ एषविश्वानि वार्या शूरो यन्निव सत्वभिः । पवमानः सिषासति ॥ एष देवो रथर्यति पवमानो दिशस्यति । आविष्कृणोति वग्वनुम् ॥ एष देवो विपन्युभिः पवमान ऋतायुभिः । हरिर्वाजाय मृज्यते ॥ एष देवो विपाकृतोऽतिह्वरांसि धावति । पवमानो अदाभ्यः ॥ एष दिवं विधावति तिरो रजांसि धारया । पवमानः कनिक्रदत् ॥ एष दिवं व्यासरत्तिरो रजांस्यस्तृतः । पवमानः स्वध्वरः ॥ एष प्रत्नेन जन्मना देवो देवेभ्यः सुतः । हरिः पवित्रे अर्षति ॥ एष उ स्य पुरुव्रतो जज्ञानो जनयन्निषः । धारया पवते सुतः ॥ २ ॥ एष धियायात्यण्व्या शूरो रथेभिराशुभिः । गच्छन्निन्द्रस्य निष्कृतम् ॥ एष पुरु धियायते बृहते देवतातये । यत्रामृतास आशत ॥ एतं मृजन्ति मर्ज्यमुपद्रोणेष्वायवः प्रचक्राणं महीरिषः ॥ एष हितो विनीयतेऽन्तः शुन्ध्यावता पथा । यदी तुञ्जन्ति भूर्णयः ॥ एष रुक्मिभिरीयते वाजी शुभ्रेभिरंशुभिः । पतिः सिन्धूनां भवन् ॥ एष शृङ्गाणि दोधुव-

च्छिशीते यूथ्यो३ वृषा । नृम्णा दधान ओजसा ॥ एष वसूनि पिब्दनः परु-
षा ययिवाँ अति । अवशादेषु गच्छति ॥ एतमुत्यं दश क्षिपो हरिं हिन्वन्ति या-
तवे । स्वायुधं मदिन्तमम् ॥ ३ ॥ एष उ स्य वृषा रथो व्यावारेभिरव्यत । गच्छन्वा-
जं सहस्रिणम् ॥ एतं त्रितस्य योषणो हरिं हिन्वन्त्यद्रिभिः । इन्दुमिन्द्राय
पीतये ॥ एष स्य मानुषीष्वा श्येनो न विक्षु सीदति । गच्छं जारो न योषितम् ॥
एष स्य मद्यो रसोऽवचष्टे दिवः शिशुः । य इन्दुर्वारमाविशत् ॥ एष स्य पीतये
सुतो हरिरर्षति धर्णसिः । क्रन्दन्योनिमभि प्रियम् ॥ एतं त्यं हरितो दश मर्मृ-
ज्यन्ते अपस्युवः । याभिर्मदाय शुम्भते ॥ ४ ॥ एष वाजी हितो नृभिर्विश्ववि-
न्मनसस्पतिः । अव्यं वारं विधावति ॥ एष पवित्रे अक्षरत्सोमो देवेभ्यः सुतः ।
विश्वा धामान्याविशन् ॥ एष देवः शुभायतेऽधि योनावमर्त्यः । वृत्रहा देववी-
तमः ॥ एष वृषा कनिक्रदद्दशभिर्जामिभिर्यतः । अभि द्रोणानि धावति ॥ एष
सूर्यमरोचयत्पवमानो अधि द्यवि । पवित्रे मत्सरो मदः ॥ एष सूर्येण हासते
संवसानो विवस्वता । पतिर्वाचो अदाभ्यः ॥ ५ ॥ एष कविरभिष्टुतः पवित्रे
अधि तोशते । पुनानो घ्नन्नप द्विषः ॥ एष इन्द्राय वायवे स्वर्जित्परिषिच्यते ।
पवित्रे दक्षसाधनः ॥ एष नृभिर्विनीयते दिवो मूर्धा वृषा सुतः । सोमो वनेषु
विश्ववित् ॥ एष गव्युरचिक्रदत्पवमानो हिरण्ययुः । इन्दुः सत्राजिदस्तृतः ॥
एष शुष्म्यसिष्यददन्तरिक्षे वृषा हरिः । पुनान इन्दुरिन्द्रमा ॥ एष शुष्म्य-
दाभ्यः सोमः पुनानो अर्षति । देवावीरघशंसहा ॥ ६ ॥ स सुतः पीतये वृषा
सोमः पवित्रे अर्षति । विघ्नन्रक्षांसि देवयुः ॥ स पवित्रे विचक्षणो हरिरर्षति
धर्णसिः । अभि योनिं कनिक्रदत् ॥ स वाजी रोचनं दिवः पवमानो विधावति ।
रक्षोहा वारमव्ययम् ॥ स त्रितस्याधि सानवि पवमानो अरोचयत् । जामिभिः
सूर्यं सह ॥ स वृत्रहा वृषा सुतो वरिवोविददाभ्यः । सोमो वाजमिवासरत् ॥
स देवः कविनेषितो३ऽभि द्रोणानि धावति । इन्दुरिन्द्राय मंहयन् ॥ ७ ॥

यः पावमानीरध्येत्यृषिभिः संभृतं रसम् । सर्वं स पूतमश्नाति स्वदितं मात-
रिश्वना ॥ पावमानीर्यो अध्येत्यृषिभिः संभृतं रसम् । तस्मै सरस्वती दुहे
क्षीरं सर्पिर्मधूदकम् ॥ पावमानीः स्वस्त्ययनीः सुदुघा हि घृतश्चुतः । ऋषिभिः
संभृतो रसो ब्राह्मणेष्वमृतं हितम् ॥ पावमानीर्दधन्तु न इमं लोकमथो अमुम् ।
कामान्त्समर्द्धयन्तु नो देवीर्देवैः समाहृताः ॥ येन देवाः पवित्रेणात्मानं पुनते सदा ।
तेन सहस्रधारेण पावमानीः पुनन्तु नः ॥ पावमानीः स्वस्त्ययनीस्ताभिर्गच्छति
नान्दनम् । पुण्यांश्च भक्षान् भक्षयत्यमृतत्वं च गच्छति ॥८॥ अगन्म महानमसा
यविष्ठं यो दीदाय समिद्धः स्वे दुरोणे । चित्रभानुं रोदसी अन्तरुर्वी स्वाहुतं
विश्वतः प्रत्यञ्चम् ॥ स मह्ना विश्वा दुरितानि साह्वानग्निष्टवे दम आ जातवेदाः ।
स नो रक्षिषद्दुरितादवद्यादस्मान् गृणत उत नो मघोनः ॥ त्वं वरुण उत मित्रो
अग्ने त्वां वर्धन्ति मतिभिर्वसिष्ठाः । त्वे वसु सुषणनानि सन्तु यूयं पात स्वस्ति-
भिः सदा नः ॥ ९ ॥ महाँ इन्द्रो य ओजसा पर्जन्यो वृष्टिमाँ इव । स्तोमैर्वत्स-
स्य वावृधे ॥ कण्वा इन्द्रं यदक्रत स्तोमैर्यज्ञस्य साधनम् । जामि ब्रुवत आयुधा ॥
प्रजामृतस्य पिप्रतः प्रयद्भरन्त वह्नयः । विप्रा ऋतस्य वाहसा ॥ १० ॥ पवमा-
नस्य जिघ्नतो हरेश्चन्द्रा असृक्षत । जीरा अजिरशोचिषः ॥ पवमानो रथीतमः
शुभ्रेभिः शुभ्रशस्तमः । हरिश्चन्द्रो मरुद्गणः ॥ पवमान व्यश्नुहि रश्मिभिर्वाज-
सातमः । दधत्स्तोत्रे सुवीर्यम् ॥ ११ ॥ परीतो षिञ्चता सुतं सोमो य उत्तमं
हविः । दधन्वाँ यो नर्यो अप्स्वाऽन्तरा सुषाव सोममद्रिभिः ॥ नूनं पुनानोऽ-
विभिः परिस्रवादब्धः सुरभिन्तरः । सुते चित्त्वाप्सु मदामो अन्धसा श्रीणन्तो गो-
भिरुत्तरम् । परि स्वानश्चक्षसे देवमादनः क्रतुरिन्दुर्विचक्षणः ॥ १२ ॥ असावि
सोमो अरुषो वृषा हरी राजेव दस्मो अभि गा अचिक्रदत् । पुनानो वारमत्ये-
ष्यव्ययं श्येनो न योनिं घृतवन्तमासदत् ॥ पर्जन्यः पिता महिषस्य पर्णिनो नाभा
पृथिव्या गिरिषु क्षयं दधे । स्वसार आपो अभिगा उतासरन्त्सं ग्रावभिर्वसते वीते
अध्वरे ॥ कविर्वेधस्या पर्येषि माहिनमत्यो न मृष्टो अभि वाजमर्षसि । अपसेधं

दुरिता सोम नो मृड घृतावसानः परियासि निर्णिजम् ॥ १३ ॥ आयन्त इव
सूर्यं विश्वेदिन्द्रस्य भक्षत । वसूनि जातो जनिमान्योजसा प्रतिभागन्न दीधिमः ॥
अलर्षि रातिं वसुदामुपस्तुहि भद्रा इन्द्रस्य रातयः । यो अस्य कामं विधतो न
रोषति मनो दानाय चोदयन् ॥ १४ ॥ यत इन्द्र भयामहे ततो नो अभयं कृधि ।
मघवञ्छग्धि तव तन्न ऊतये विद्विषो विमृधो जहि ॥ त्वं हि राधसस्पते राधसो
महः क्षयस्यासि विधर्त्ता । तं त्वा वयं मघवन्निन्द्र गिर्वणः सुतावन्तो हवामहे
॥ १५ ॥ त्वं सोमासि धारयुर्मन्द्र ओजिष्ठो अध्वरे । पवस्व मंहयद्रयिः ॥ त्वं
सुतो मदिन्तमो दधन्वान्मत्सरिन्तमः । इन्दुः सत्राजिदस्तृतः ॥ त्वं सुष्वाणो अ-
द्रिभिरभ्यर्ष कनिक्रदत् । द्युमन्तं शुष्ममाभर ॥ १६ ॥ पवस्व देववीतय इन्दो धारा-
भिरोजसा । आकलशं मधुमान्त्सोम नः सदः ॥ तव द्रप्सा उदप्रुत इन्द्रं मदाय
वावृधुः । त्वां देवासो अमृताय कम्पपुः ॥ आ नः सुतास इन्दवः पुनाना धावता
रयिम् । वृष्टिद्यावो रीत्यापः स्वर्विदः ॥ १७ ॥ परि त्यं हर्यतं हरिं बभ्रुं पुनन्ति
वारेण । यो देवान्विश्वाँ इत्परि मदेन सह गच्छति ॥ द्विर्यं पंच स्वयशसं स-
खायो अद्रिसंहतम् । प्रियमिन्द्रस्य काम्यं प्रस्नापयन्त ऊर्मयः ॥ इन्द्राय सोम पा-
तवे वृत्रघ्ने परिषिच्यसे । नरे च दक्षिणावते वीराय सदनासदे ॥ १८ ॥ पवस्व
सोम महे दक्षायाश्वो न निक्तो वाजी धनाय ॥ प्र ते सोतारो रसं मदाय पुनन्ति
सोमं महे द्युम्नाय ॥ शिशुं जज्ञानं हरिम्मृजन्ति पवित्रे सोमं देवेभ्य इन्दुम् ॥ १९ ॥
उपांशु जातमप्तुरं गोभिर्भंगं परिष्कृतम् । इन्दुं देवा अयासिषुः ॥ तमिद्वर्धन्तु
नो गिरावत्सं संशिश्वरीरिव । य इन्द्रस्य हृदंसनिः ॥ अर्षा नः सोम शं गवे
धुक्षस्व पिप्युषीमिषम् । वर्धा समुद्रमुक्थ्य ॥ २० ॥ आघा ये अग्निमिन्धते
स्तृणन्ति बर्हिरानुषक् । येषामिन्द्रो युवा सखा ॥ बृहन्निदिध्म एषां भूरिशस्त्रं
पृथुः स्वरुः । येषामिन्द्रो युवा सखा ॥ अयुद्ध इद्युधा वृतं शूर आजति सत्वभिः
येषामिन्द्रो युवा सखा ॥ २१ ॥ य एक इद्विदयते वसु मर्त्ताय दाशुषे । ईशानो
अप्रतिष्कुत इन्द्रो अङ्ग ॥ यश्चिद्धि त्वा बहुभ्य आ सुतावाँ आविवासति । उग्रं

तत्पत्यते शव इन्द्रो अङ्ग ॥ कदा मर्तमराधसं पदा क्षुम्पमिव स्फुरत् । कदा नः सुश्रावद्गिर इन्द्रो अङ्ग ॥ २२ ॥ गायन्ति त्वा गायत्रिणोऽर्चन्त्यर्कमर्किणः । ब्रह्माणस्त्वा शतक्रत उद्वंशमिव येमिरे ॥ यत्सानोस्सान्वारुहो भूर्यस्पष्ट कर्त्वम् । तदिन्द्रो अर्थं चेतति यूथेन वृष्णिरेजति ॥ युंक्ष्वा हि केशिना हरी वृषणा कक्ष्यप्रा । अथा न इन्द्र सोमपा गिरामुपश्रुतिं चर ॥ २३ ॥

इति द्वितीयोऽर्धः प्रपाठकः तृतीयश्च

प्रपाठकः समाप्तः

---

# अथ षष्ठः प्रपाठकः ॥

ऋषिः—१, ६ मेधातिथिः काण्वः । १, १० वसिष्ठः । ३ प्रगाथः काण्वः । ४ पराशरः । ५ प्रगाथो घौरः काण्वो वा । ७ त्र्यरुणत्रसदस्यू । ८ अग्नयो धिष्ण्या ऐश्वराः । ९ हिरण्यस्तूपः । ११ सार्पराज्ञी ॥ देवता—१ इध्मः समिद्धोवाग्निः तनूनपात् नराशंसः इळः क्रमेण । २ आदित्याः । ३, ५, ६ इन्द्रः । ४, ७—९ पवमानः सोमः । १० अग्निः । ११ सार्पराज्ञी ॥ छन्दः—४—३, ११ गायत्री । ४ त्रिष्टुप् । ५ बृहती । ६ प्रागाथं । ७ अनुष्टुप् । ४ द्विपदा पंक्तिः । ९ जगती । १० विराड् जगती ॥ स्वरः—१—३, ११ षड्जः । ४ धैवतः । ५, ६ मध्यमः । ७ गान्धारः । ८ पञ्चमः । ९, १० निषादः ॥

सुषमिद्धो न आवह देवां अग्ने हविष्मते । होतः पावक यक्षि च ॥ मधुमन्तं तनूनपाद्यज्ञं देवेषु नः कवे । अद्या कृणु ह्यूतये ॥ नराशंसमिह प्रियमस्मिन्यज्ञ उपह्वये । मधुजिह्वं हविष्कृतम् ॥ अग्ने सुखतमे रथे देवां ईडित आवह । असि होता मनुर्हितः ॥ १ ॥ यदद्य सूर उदितेऽनागा मित्रो अर्यमा । सुवाति सविता भगः ॥ सुप्रावीरस्तु सक्षयः प्रनुयामन्त्सुदानवः । ये नो अंहोऽतिपिप्रति ॥ उत स्वराजो अदितिरदब्धस्य व्रतस्य ये । महो राजान ईशते ॥ २ ॥ उत्त्वा मदन्तु सोमाः कृणुष्व राधो अद्रिवः । अव ब्रह्मद्विषो जहि ॥ पदा पणीनराधसो निबाधस्व महाँ असि । न हि त्वा कश्चन प्रति ॥ त्वमीशिषे सुतानामिन्द्र त्वमसुतानाम् । त्वं राजा जनानाम् ॥ ३ ॥ आ जागृविर्विप्र ऋतं मतीनां सोमः पुनानो असदच्चमूषु । सपन्ति यं मिथुनासो निकामा अध्वर्यवो रथिरासः सुहस्ताः ॥ स पुनान उपसूरे दधान ओमे अप्रा रोदसी वीष आवः । प्रियाचिद्यस्य प्रियसास ऊती सतो धनं कारिणे न प्रयं सत् ॥ स वर्द्धिता वर्द्धनः पूयमानः सोमो मीढ्वां अभि नो ज्योतिषा वीत् । यत्र न पूर्वे पितरः पदज्ञाः स्वर्विदो अभिगा अद्रिमि-

ष्णन् ॥ ४ ॥ माचिदन्यद्विशंसत सखायो मा रिषण्यत । इन्द्रमित्स्तोता वृषणं
सचा सुते मुहुरुक्था च शंसत ॥ अवक्रक्षिणं वृषभं यथा जुवं गां न चर्षणीस-
हम् । विद्वेषणं संवननमुभयङ्करं मंहिष्ठमुभयाविनम् ॥५॥ उदुत्ये मधुमत्तमा गिरः
स्तोमास ईरते । सत्राजितो धनसा अक्षितोतयो वाजयन्तो रथा इव ॥ कण्वा
इव भृगवः सूर्या इव विश्वमिद्धीतमाशत । इन्द्रं स्तोमेभिर्महयन्त आयवः प्रियमे-
धासो अस्वरन् ॥ ६ ॥ पर्यू षु प्र धन्व वाजसातये परि वृत्राणि सक्षणिः । द्विष-
स्तरध्या ऋणया न ईरसे ॥ अजीजनो हि पवमान सूर्यं विधारे शक्मना पयः ।
गोजीरया रंहमाणः पुरन्ध्या ॥ अनु हि त्वा सुतं सोम मदामसि महे समर्यराज्ये ।
वाजाँ अभि पवमान प्र गाहसे ॥ ७ ॥ परि प्र धन्वेन्द्राय सोम स्वादुर्मित्राय पूष्णे-
भगाय । एवामृताय महे क्षयाय स शुक्रो अर्ष दिव्यः पीयूषः ॥ इन्द्रस्ते सोम
सुतस्य पेयात् क्रत्वे दक्षाय विश्वे च देवाः ॥ ८ ॥ सूर्यस्येव रश्मयो द्रावयि-
त्नवो मत्सरासः प्रसुतः साकमीरते । तन्तुं ततं परि सर्गास आशवो नेन्द्रादृते प-
वते धाम किञ्चन ॥ उपो मतिः पृच्यते सिच्यते मधु मन्द्राजनी चोदते अन्तरासनि ।
पवमानः सन्तनिः सुन्वतामिव मधुमान् द्रप्सः परि वारमर्षति ॥ उक्षा मिमेति प्र-
तियन्ति धेनवो देवस्य देवीरुप यन्ति निष्कृतम् । अत्यक्रमीदर्जुनं वारमव्ययमत्कं न
निक्तं परि सोमो अव्यत ॥ ९ ॥ अग्निं नरो दीधितिभिररण्योर्हस्तच्युतं जन-
यत प्रशस्तम् । दूरेदृशं गृहपतिमथव्युम् ॥ तमग्निमस्ते वसवो न्यृण्वन्त्सुप्रतिचक्ष-
मवसे कुतश्चित् । दक्षाय्यो यो दम आस नित्यः ॥ प्रेद्धो अग्ने दीदिहि पुरो नोऽ-
जस्रया सूर्म्या यविष्ठ । त्वां शश्वन्त उप यन्ति वाजाः ॥ १० ॥ आयं गौः पृश्नि-
रक्रमीदसदन्मातरं पुरः । पितरं च प्रयन्त्स्वः ॥ अन्तश्चरति रोचनास्य प्राणा-
दपानती । व्यख्यन्महिषो दिवम् ॥ त्रिंशद्धाम विराजति वाक्पतङ्गाय धीयते ।
प्रति वस्तोरहद्युभिः ॥ ११ ॥

इति प्रथमोऽर्धः प्रपाठकः

ऋषिः—१ गोतमो राहूगणः, वसिष्ठः तृतीयस्य । २, ७ भरद्वाजो बार्हस्पत्यः । ३ प्रजापतिः । ४, १३ सोभरिः काण्वः । ५ मेधातिथि मेध्यातिथी काण्वः । ६ ऋजिश्वा ऊर्ध्वसद्मा च क्रमेण । ८, ११ वसिष्ठः । ९ तिरश्चीः । १० सुतंभर आत्रेयः । १२, १९ नृमेधपुरुमेधौ । १४ शुनःशेप आजीगर्तिः । १५ नोधाः । १६ मेधातिथिः काण्वः । १७ रेणुर्वैश्वामित्रः । १८ कुत्सः । २० आगस्त्यः ॥ देवता—१, २, ७, १०, १३, १४ अग्निः । ३, ६, ८, ११, १५, १७, १८ पवमानः सोमः । ४, ५, ९, १२, १६, १९, २० इन्द्रः ॥ छन्दः—१, २, ७, १०, १४ गायत्री । ३, ९ अनुष्टुप् । ४, १२, १३, १६ प्रागाथं । ५ बृहती । ६ ककुप् सतोबृहती च क्रमेण । ८, ११, १५, १८ त्रिष्टुप् । १७ जगती । १९ अनुष्टुभौ बृहती च क्रमेण । २० बृहती, अनुष्टुभौ क्रमेण ॥ स्वरः—१, २, ७, १०, १४ षड्जः । ३, ९, १९ गान्धारः । ४–६, १२, १३, १६, २० मध्यमः । ८, ११, १५, १८ धैवतः । १७ निषादः ॥

उपप्रयन्तो अध्वरं मन्त्रं वोचेमाग्नये । आरे अस्मे च शृण्वते ॥ यः स्नीहितीषु पूर्व्यः सञ्जग्मानासु कृष्टिषु । अरक्षद्दाशुषे गयम् ॥ स नो वेदो अमात्यमग्नी रक्षतु शन्तमः । उतास्मान्पात्वंहसः ॥ उत ब्रुवन्तु जन्तव उदग्निर्वृत्रहाजनि । धनञ्जयो रणेरणे ॥ १ ॥ अग्ने युंक्ष्वा हि ये तवाश्वासो देव साधवः । अरं वहन्त्याशवः ॥ अच्छा नो याह्या वहाभि प्रयांसि वीतये । आ देवान्त्सोमपीतये ॥ उदग्ने भारत द्युमदजस्रेण दविद्युतत् । शोचा विभाह्यजर ॥ २ ॥ प्रसुन्वानायान्धसो मर्तो न वष्ट तद्वचः । अप श्वानमराधसं हता मखं न भृगवः ॥ आ जामिरत्के अव्यत भुजे न पुत्र ओण्योः । सरज्जारो न योषणां वरो न योनिमासदम् ॥ स वीरो दक्षसाधनो वि यस्तस्तम्भ रोदसी । हरिः पवित्रे अव्यत वेधा न योनिमासदम् ॥ ३ ॥ अभ्रातृव्यो अना त्वमनापिरिन्द्र जनुषा सनादसि । युधेदापित्वमिच्छसे ॥ न की रेवन्तं सख्याय विन्दसे पीयन्ति ते सुराश्वः । यदा कृणोषि नदनुं समूहस्यादित्पितेव हूयसे ॥४॥ आ त्वा सहस्रमा शतं युक्ता रथे हिरण्यये । ब्रह्मयुजो हरय इन्द्र केशिनो वहन्तु सोमपीतये ॥ आ त्वा रथे हिरण्यये हरी मयूरशेप्या । शितिपृष्ठा वहतां मध्वो अन्धसो विवक्षणस्य पीतये ॥

पिबा त्वा३स्य गिर्वणः सुतस्य पूर्वपा इव । परिष्कृतस्य रसिन इयमासुतिश्चारु-
र्मदाय पत्यते ॥ ५ ॥ आसोतापरिषिंचताश्वं न स्तोम मप्तुरं रजस्तुरम् । वनप्र-
क्षमुदप्रुतम् ॥ सहस्रधारं वृषभं पयोदुहं प्रियं देवाय जन्मने । ऋतेन य ऋतजातो
विवावृधे राजा देव ऋतं बृहत् ॥ ६ ॥ अग्निर्वृत्राणि जंघनद्द्रविणस्युर्विपन्यया ।
समिद्धः शुक्र आहुतः ॥ गर्भे मातुः पितुष्पिता विदिद्युतानो अक्षरे । सीदन्नृ-
तस्य योनिमा ॥ ब्रह्म प्रजावदामर जातवेदो विचर्षणे । अग्ने यद्दीदयद्दिवि
॥ ७ ॥ अस्य प्रेषा हेमना पूयमानो देवो देवेभिः समपृक्त रसम् । सुतः पवित्रं
पर्येति रेभन् मितेव सद्म पशुमन्ति होता ॥ भद्रा वस्त्रा समन्या३वसानो महान्
कविर्निवचनानि शंसन् । आवच्यस्व चम्वोः पूयमानो विचक्षणो जागृविर्देव-
वीतौ ॥ समु प्रियो मृज्यते सानो अव्ये यशस्तरो यशसां क्षैतो अस्मे । अभि-
स्वर धन्वा पूयमानो यूयं पात स्वस्तिभिः सदा नः ॥ ८ ॥ एतोन्विन्द्रं स्तवाम
शुद्धं शुद्धेन साम्ना । शुद्धैरुक्थैर्वावृध्वांसं शुद्धैराशीर्वान्ममत्तु ॥ इन्द्र शुद्धो न
आगहि शुद्धः शुद्धाभिरूतिभिः । शुद्धो रयिं निधारय शुद्धो ममद्धि सोम्य ॥ इन्द्र
शुद्धो हि नो रयिं शुद्धो रत्नानि दाशुषे । शुद्धो वृत्राणि जिघ्नसे शुद्धो वाजं सि-
षाससि ॥ ९ ॥ अग्ने स्तोमं मनामहे सिध्रमद्य दिविस्पृशः । देवस्य द्रविणस्य-
वः ॥ अग्निर्जुषत नो गिरो होता यो मानुषेष्वा । स यक्षद्दैव्यं जनम् ॥ त्वमग्ने
सप्रथा असि जुष्टो होता वरेण्यः । त्वया यज्ञं वितन्वते ॥ १० ॥ अभि त्रिपृष्ठं
वृषणं वयोधामङ्गोषिणमवावशंत वाणीः । वना वसानो वरुणो न सिन्धुर्वि रत्नधा
दयते वार्याणि ॥ शूरग्रामः सर्ववीरः सहावाञ्जेता पवस्व सनिता धनानि ।
तिग्मायुधः क्षिप्रधन्वा समत्स्वषाढः साह्वान् पृतनासु शत्रून् ॥ उरुगव्यूतिरभयानि
कृण्वन्त्समीचीने आपवस्वा पुरन्धी । अपः सिषासन्नुषसः स्वा३र्गाः सं चिक्रदो
महो अस्मभ्यं वाजान् ॥ ११ ॥ त्वमिन्द्र यशा अस्यृजीषी शवसस्पतिः त्वं वृ-
त्राणि हंस्यप्रतीन्येक इत्पुर्वनुत्तश्चर्षणीधृतिः ॥ तमु त्वा नूनमसुर प्रचेतसं राधो
भागमिवेमहे । महीव कृत्तिः शरणा त इन्द्र प्र ते सुम्ना नो अश्नवन् ॥ १२ ॥

यजिष्ठं त्वा ववृमहे देवं देवत्रा होतारममर्त्यम् । अस्य यज्ञस्य सुक्रतुम् ॥ अपा-
मपातं सुभगं सुदीदितिमग्निमु श्रेष्ठशोचिषम् । स नो मित्रस्य वरुणस्य सो अपा-
मासुम्नं यक्षते दिवि ॥ १३ ॥ यमग्ने पृत्सु मर्त्यमवा वाजेषु यञ्जुनाः । स यन्ता
शश्वतीरिषः ॥ न किरस्य सहन्त्य पर्येता कयस्यचित् । वाजो अस्ति श्रवाय्यः ॥
स वाजं विश्वचर्षणिरर्वद्भिरस्तु तरुता । विप्रेभिरस्तु सनिता ॥ १४ ॥ साकमु-
क्षो मर्जयन्त स्वसारो दश धीरस्य धीतयो धनुत्रीः । हरिः पर्यद्रवज्जाः सूर्यस्य
द्रोणमनक्षे अत्यो न वाजी ॥ सं मातृभिर्न शिशुर्वावशानो वृषा दधन्वे पुरुवारो
अद्भिः । मर्यो न योषामभिनिष्कृतं यत् संगच्छते कलश उस्रियाभिः ॥ उत प्र
पिप्य ऊधरघ्न्याया इन्दुर्धाराभिः सचते सुमेधाः । मूर्धानं गावः पयसा चमूष्व-
भिश्रीणन्ति वसुभिर्न निक्तैः ॥ १५ ॥ पिबा सुतस्य रसिनो मत्स्वा न इन्द्र
गोमतः । आपिर्नो बोधि सधमाद्ये वृधे३ऽस्माँ अवन्तु ते धियः ॥ भूयाम ते
सुमतौ वाजिनो वयं मा नस्तरभिमातये । अस्माँ चित्राभिरवतादभिष्टिभिरा
नः सुम्नेषु यामय ॥ १६ ॥ त्रिरस्मै सप्त धेनवो दुदुह्रिरे सत्यामाशिरं परमे
व्योमनि । चत्वार्यन्या भुवनानि निर्णिजे चारूणि चक्रे यदृतैरवर्द्धत ॥ स भक्ष-
माणो अमृतस्य चारुण उभे द्यावा काव्येना विशश्रथे । तेजिष्ठा अपो मंहना
परिव्यत यदी देवस्य श्रवसा सदो विदुः ॥ ते अस्य सन्तु केतवोऽमृत्यवो दा-
भ्यासो जनुषी उभे अनु । येभिर्नृम्णा च देव्या च पुनत आदिद्राजानं मनना
अगृभ्णत ॥ १७ ॥ अभि वायुं वीत्यर्षा गृणानो३ऽभि मित्रावरुणा पूयमानः ।
अभी नरं धीजवनं रथेष्ठामभीन्द्रं वृषणं वज्रबाहुम् ॥ अभि वस्त्रा सुवसनान्यर्षा-
भि धेनूः सुदुघाः पूयमानः । अभि चन्द्रा भर्तवे नो हिरण्याभ्यश्वान्रथिनो देव-
सोम ॥ अभी नो अर्ष दिव्या वसून्यभि विश्वा पार्थिवा पूयमानः । अभि येन
द्रविणमश्नवामाभ्यार्षेयं जमदग्निवन्नः ॥ १८ ॥ यज्जा यथा अपूर्व्य मघवन्वृत्र-
हत्याय । तत्पृथिवीमप्रथयस्तदस्तभ्ना उतो दिवम् ॥ तत्ते यज्ञो अजायत तदर्क
उत हस्कृतिः । तद्विश्वमभिभूरसि यज्जातं यच्च जन्त्वम् ॥ आमासु पक्वमैरय आ

सूर्यं रोहयो दिवि । घर्मं न सोम तपता सुवृक्तिभिर्जुष्टं गिर्वणसे बृहत् ॥ १९ ॥ मत्स्यपायि ते महः पात्रस्येव हरिवो मत्सरो मदः । वृषा ते वृष्ण इन्दुर्वाजी सहस्रसातमः ॥ आ नस्ते गन्तु मत्सरो वृषा मदो वरेण्यः । सहावाँ इन्द्र सानसिः पृतनाषाडमर्त्यः ॥ त्वं हि शूरः सनिता चोदयो मनुषो रथम् । सहावान्दस्युमव्रतमोषः पात्रं न शोचिषा ॥ २० ॥

इति द्वितीयोर्धः प्रपाठकः

ऋषिः—१ कविर्भार्गवः । २, ६, १६ भरद्वाजो बार्हस्पत्यः । ३ असितः काश्यपो देवलो वा । ४ सुकक्षः । ५ विभ्राट् सौर्यः । ६, ८ वसिष्ठः । ७ भर्गः प्रागाथः । १०, १७ विश्वामित्रः । ११ मेधातिथिः काण्वः । १२ शतं वैखानसाः । १३ यजत आत्रेयः ॥ १४ मधुच्छन्दः वैश्वामित्रः । १५ उशनाः । १८ हर्यतः प्रागाथः । १९ बृहद्दिव आथर्वणः । २० गृत्समदः ॥ देवता—१, ३, १५ पवमानः सोमः । २, ४, ६, ७, १४, १६, २० इन्द्रः । ५ सूर्यः । ८ सरस्वान । ६ सरस्वती । १० सविता । ११ ब्रह्मणस्पतिः । १२, १६, १७ अग्निः । १३ मित्रावरुणौ । १८ अग्निर्हवींषि वा ॥ छन्दः—१, ३, ४, ८, ६, १०—१४, १७, १८ गायत्री । २ बृहती चरमस्य अनुष्टुप् शेषः । ५ जगती । ६, ७ प्रागाथम । १५, १६ त्रिष्टुप् । १६ वर्धमाना पूर्वस्य गायत्री उत्तरयोः । २० अष्टिः पूर्वस्य अतिशक्वरी उत्तरयोः ॥ स्वरः—१, ३, ४, ८, ६, १०—१४, १६—१८ षड्जः । २ मध्यमः चरमस्य गान्धारः । ५ निषादः । ६, ७ मध्यमः । १५, १६ धैवतः । २० मध्यमः पूर्वस्य पञ्चमः उत्तरयोः ॥

पवस्व वृष्टिमा सु नोऽपामूर्मिं दिवस्परि । अयक्ष्मा बृहतीरिषः ॥ तया पवस्व धारया यया गाव इहागमन् । जन्यास उप नो गृहम् ॥ घृतम्पवस्व धारया यज्ञेषु देववीतमः । अस्मभ्यं वृष्टिमापव ॥ स न ऊर्जेव्या३ऽव्ययं पवित्रं धावधारया । देवासः शृणवन् हि कम् ॥ पवमानो असिष्यदद्रक्षांस्यपजङ्घनत् । प्रत्नवद्रोचयन्रुचः ॥ १ ॥ प्रत्यस्मै पिपीषते विश्वानि विदुषे भर । अरङ्गमाय जग्मयेऽपश्चादध्वने नरः ॥ एमेनं प्रत्येतन सोमेभिः सोमपातमम् । अमत्रेभिर्ऋजीषिणमिन्द्रं सुतेभि-

रिन्दुभिः ॥ यदी सुतेभिरिन्दुभिः सोमेभिः प्रतिभूषथ। वेदा विश्वस्य मेधिरो धृषत्तं तमिदेषते ॥ अस्मा अस्मा इदन्धसोऽध्वर्यो प्रभरा सुतम्। कुवित्समस्य जेन्यस्य शर्द्धतोऽभिशस्तेरवस्वरत् ॥ २ ॥ बभ्रवे नु स्वतवसे ऽरुणाय दिविस्पृशे। सोमाय गाथमर्चत ॥ हस्तच्युतेभिरद्रिभिः सुतं सोमं पुनीतन। मधावाधावता मधु ॥ नमसेदुपसीदत दध्नेदभिश्रीणीतन। इन्दुमिन्द्रे दधातन ॥ अमित्रहा विचर्षणिः पवस्व सोम शं गवे। देवेभ्यो अनुकामकृत् ॥ इन्द्राय सोम पातवे मदाय परिषिच्यसे। मनश्चिन्मनसस्पतिः ॥ पवमान सुवीर्यं रयिं सोम रिरीहिणः। इन्दविन्द्रेण नो युजा ॥ ३ ॥ उद्धेदभिश्रुतामघं वृषभं नर्यापसम्। अस्तारमेषि सूर्य ॥ नव यो नवतिं पुरो बिभेद बाह्वोजसा। अहिं च वृत्रहावधीत् ॥ स न इन्द्रः शिवः सखाश्वावद्गोमद्यवमत्। उरुधारेव दोहते ॥ ४ ॥ विभ्राड् बृहत्पिबतु सोम्यं मध्वायुर्दधद्यज्ञपतावविहुतम्। वातजूतो यो अभिरक्षति त्मना प्रजाः पिपर्त्ति बहुधा विराजति ॥ विभ्राड् बृहत्सुभृतं वाजसातमं धर्मं दिवो धरुणे सत्यमर्पितम्। अमित्रहा वृत्रहा दस्युहन्तमं ज्योतिर्जज्ञे असुरहा सपत्नहा ॥ इदं श्रेष्ठं ज्योतिषां ज्योतिरुत्तमं विश्वजिद्धनजिदुच्यते बृहत्। विश्वभ्राड् भ्राजो महि सूर्यो दृश उरु पप्रथे सह ओजो अच्युतम् ॥ ५ ॥ इन्द्र क्रतुं न आभर पिता पुत्रेभ्यो यथा। शिक्षा णो अस्मिन् पुरुहूत यामनि जीवा ज्योतिरशीमहि ॥ मा नो अज्ञाता वृजना दुराध्योऽमाशिवासोऽवक्रमुः। त्वया वयं प्रवतः शश्वतीरपोऽति शूर तरामसि ॥ ६ ॥ अद्याद्या श्वःश्व इन्द्र त्रास्व परे च नः। विश्वा च नो जरितॄन्त्सत्पते अहा दिवा नक्तं च रक्षिषः ॥ प्रभङ्गी शूरो मघवा तुवीमघः सम्मिश्लो वीर्याय कम्। उभा ते बाहू वृषणा शतक्रतो नि या वज्रं मिमिक्षतुः ॥ ७ ॥ जनीयन्तोऽन्वग्रवः पुत्रीयन्त सुदानवः। सरस्वन्तं हवामहे ॥ ८ ॥ उत नः प्रिया प्रियासु सप्त स्वसा सुजुष्टा। सरस्वती स्तोम्याभूत् ॥ ९ ॥ तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि। धियो यो नः प्रचोदयात् ॥ १० ॥ सोमानां स्वरणं कृणुहि ब्रह्मणस्पते। कक्षीवन्तम् य औशिजः ॥ ११ ॥ अग्ने आयूंषि पवसे आ सुवोर्ज-

मिषे चनः । आरे बाधस्व दुच्छुनाम् ॥ १२ ॥ ता नः शक्तं पार्थिवस्य महि
रायो दिव्यस्य । महि वां क्षत्रं देवेषु ॥ ऋतमृतेन सपन्तेषिरं दक्षमाशाते । अ-
द्रुहा देवौ वर्द्धेते ॥ वृष्टिद्यावा रीत्यापेषस्पती दानुमत्याः । बृहन्तं गर्तमाशाते
॥ १३ ॥ युञ्जन्ति ब्रध्नमरुषं चरन्तं परितस्थुषः । रोचन्ते रोचना दिवि ॥ यु-
ञ्जन्त्यस्य काम्या हरी विपक्षसा रथे । शोणा धृष्णू नृवाहसा ॥ केतुं कृण्वन्न-
केतवे पेशो मर्या अपेशसे । समुषद्भिरजायथाः ॥ १४ ॥ अयं सोम इन्द्र तुभ्यं सु-
न्वे तुभ्यं पवते त्वमस्य पाहि । त्वं ह यं चकृषे त्वं ववृष इन्दुं मदाय युज्याय सो-
मम् ॥ स ईं रथो न भुरिषाडयोजि महः पुरूणि सातये वसूनि । आदीं विश्वा न
हुष्याणि जाता स्वर्षाता वन ऊर्ध्वा नवन्त ॥ शुष्मी शर्धो न मारुतं पवस्वानभि-
शस्ता दिव्या यथा विट् । आपो न मक्षू सुमतिर्भवा नः सहस्राप्साः पृतनाषाड्
न यज्ञः ॥ १५ ॥ त्वमग्ने यज्ञानां होता विश्वेषां हितः । देवेभिर्मानुषे जने ॥ स
नो मन्द्राभिरध्वरे जिह्वाभिर्यजा महः । आ देवान्वक्षि यक्षि च ॥ वेत्था हि वेधो
अध्वनः पथश्च देवाञ्जसा । अग्ने यज्ञेषु सुक्रतो ॥ १६ ॥ होता देवो अ-
मर्त्यः पुरस्तादेति मायया । विदथानि प्रचोदयन् ॥ वाजी वाजेषु धीयतेऽध्वरेषु
प्रणीयते । विप्रो यज्ञस्य साधनः ॥ धिया चक्रे वरेण्यो भूतानां गर्भमादधे । द-
क्षस्य पितरं तना ॥ १७ ॥ आ सुते सिञ्चत श्रियं रोदस्योरभिश्रियम् । रसा
दधीत वृषभम् ॥ ते जानत स्वमोक्यांऽसं वत्सासो न मातृभिः । मिथो न स-
न्त जामिभिः ॥ उप स्रक्वेषु बप्सतः कृण्वते धरुणं दिवि । इन्द्रे अग्ना नमः स्वः
॥ १८ ॥ तदिदास भुवनेषु ज्येष्ठं यतो जज्ञ उग्रस्त्वेषनृम्णः । सद्यो जज्ञानो नि-
रिणाति शत्रूननु यं विश्वे मदन्त्यूमाः ॥ वावृधानः शवसा भूर्योजाः शत्रुर्दासाय
भियसं दधाति । अव्यनच्च व्यनच्च सस्नि सं ते नवन्त प्रभृता मदेषु ॥ त्वे क्रतुमपि
वृञ्जन्ति विश्वे द्विर्यदेते त्रिर्भवन्त्यूमाः ॥ स्वादोः स्वादीयः स्वादुना सृजा समदः
सुमधु मधुनाभि योधीः ॥ १९ ॥ त्रिकद्रुकेषु महिषो यवाशिरं तुविशुष्मस्तृपत्सो-
ममपिबद्विष्णुना सुतं यथावशम् । स ईं ममाद महि कर्म कर्तवे महामुरुं सैनं स-

